आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३४

श्रीवेदव्यासप्रणीतमहाभारतान्तर्गता

# श्रीमद्भगवद्गीता

शांकरभाष्यसमेता ।

( विषयानुक्रम–श्लोकवर्णानुक्रम–शब्दवर्णानुक्रमादिभिः
सनाथीकृता च )

एतत्पुस्तकं वे० शा० सं० रा० रा० काशीनाथशास्त्री आगाशे
इत्येतैः संशोधितम् ।
तच्च
बी. ए. इत्युपपदधारिभिः
विनायक गणेश आपटे
इत्येतैः

पुण्याख्यपत्तने
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।

द्वितीयेयमङ्कनावृत्तिः ।
शालिवाहनशकाब्दाः १८४९
खिस्ताब्दाः १९२७



मूल्यं रूपकद्वयम् ( २ ) ।

# आदर्शपुस्तकोल्लेखपत्रिका ।

—÷—:*:—÷—

श्रीमद्भगवद्गीतायाः पुस्तकानि यैः परहितैकपरायणमनीषया संस्करणार्थं प्रदत्तानि तेषां नामग्रामादिकं पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

१ क. इति संज्ञितम्—सटीकभाष्योपेतं पुण्यपत्तनस्थे जगद्धितेच्छुनाम्नि मुद्रणालये मुद्रितम् ।

२ ख. इति संज्ञितम्—सटीकभाष्योपेतम्, पुण्यपत्तनस्थानां साठे इत्युपाह्वानां कै० रा० रा० 'गोपाळराव' इत्येतेषाम् ।

३ ग. इति संज्ञितम्—सटीकभाष्योपेतमपूर्णम, रा०रा० "मल्हाररावपुरंदरे" इत्येतेषाम् ।

४ घ. इति संज्ञितम्— केवलभाष्यसमेतम् । श्रीयुतानां किबे इत्युपाह्वानां इन्दूरपुरनिवासिनां रा० रा० "भाऊसाहेब" इत्येतेषाम् । लेखनकालः—संवत् १८१३ ।

५ ङ इति संज्ञितम्—केवलटीकाया एव । श्रीयुतानां रा० रा० 'मोरोबा दादा फडणवीस' इत्येतेषाम् ।

६ च. इति संज्ञितम्—सटीकभाष्योपेतमपूर्णम् । साठ्ये इत्युपाह्वानां रा० रा० "रामचन्द्र हरी" इत्येतेषाम् ।

७ छ. इति संज्ञितम्—केवलभाष्यसहितमपूर्णम् । कै० रा० रा० 'बाळासाहेब देव' इत्येतेषाम् ।

८ ज. इति संज्ञितम्—केवलटीकाया एव । पुण्यपत्तनस्थानां रा० रा० 'भाऊसाहेब नमरकर' इत्येतेषाम् ।

९ झ. इति संज्ञितम्—केवलभाष्यसहितमेव । श्रीयुतानां रा० रा० 'मोरोबा दादा फडणवीस' इत्येतेषाम् ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

====

# अथ श्रीमद्भगवद्गीताश्लोकान्तर्गतविषयाणामध्यायक्रमेणानुक्रमणिका ।

## १ कर्मसंन्यासात्मकसाधनप्रधाना त्वंपदार्थप्रधाना चाऽऽद्या षडध्यायी ।

## २ उपास्यनिष्ठा तत्पदार्थनिष्ठा वा मध्यमा षडध्यायी।

## ३ तत्त्वंपदार्थैक्यरूपवाक्यार्थनिष्ठा सम्यग्धीप्रधानाऽन्तिमा षडध्यायी ।

# अथ श्रीमद्भगवद्गीताशांकरभाष्यस्थविशेषविषयानुक्रमणिका ।

इति श्रीमद्भगवद्गीताशांकरभाष्यस्थविशेषविषयानुक्रमणिका समाप्ता ।

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीवेदव्यासप्रणीतमहाभारतान्तर्गता

# श्रीमद्भगवद्गीता

श्रीमच्छांकरभाष्यसमेता ।

( उपोद्घातः । )

ॐ नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥ १ ॥

स भगवान्सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन्प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम् । ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास ।

द्विविधो हि वेदोक्तो धर्मः, प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च[1] । जगतः स्थितिकारणं प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोर्थिभिरनुष्ठीयमानः । दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवर्धमाने चाधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन[2] किल संबभूव । ब्राह्मणत्वस्य हि रक्षणेन[3] रक्षितः स्याद्वैदिको धर्मस्तदधीनत्वाद्वर्णाश्रमभेदानाम् ।

स च भगवाञ्ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां[4] मूलप्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन्स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन्निव लक्ष्यते । स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति । तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान्गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध ।

---

१ क. घ. श्च । तत्रैको ज° । २ क. °न कृष्णः कि° । ३ घ. °णे र° । ४ ख. ग. च. ङ. °यां म° ।

तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थम् । तदर्थाविष्करणायानेकैर्विवृतपदपदार्थवाक्यार्थन्यायमप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरणं करिष्यामि ।

तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणम् । तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति । तथेममेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तम्—

"स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने" इत्यनुगीतासु[1] ।

तत्रैव[2] चोक्तम्—"नैव धर्मी न चाधर्मी न[3] चैव हि शुभाशुभी ।

यः स्यादेकासने लीनस्तूष्णीं किंचिदचिन्तयन्" ॥

'ज्ञानं संन्यासलक्षणम्' इति च ।

इहापि चान्त उक्तमर्जुनाय—'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति । अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहितः स देवादिस्थानप्राप्तिहेतुरपि सन्नीश्वरार्पणबुद्ध्याऽनुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसंधिवर्जितः । शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते । तथा[4] चेममेवार्थमभिसंधाय वक्ष्यति—'ब्रह्मण्याधाय कर्माणि' 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये' इति ।

इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वं च वासुदेवाख्यं परं ब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयद्विशिष्टप्रयोजनसंबन्धाभिधेयवद्गीताशास्त्रम् । यतस्तदर्थे[5] विज्ञाते समस्तपुरुषार्थसिद्धिरित्यतस्तद्विवरणे यत्नः क्रियते मया ।

अत्र च—

अथ प्रथमोऽध्यायः ।

---

धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।

मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥

---

१ ग. °सु । किंचान्यदपि त° । २ क. ख. ग. च. त्रैवोक्त° । ३ ख. ग. च. न चापि स्याच्छुभा° । ४ ... चापि हि । ४ ख. ग. च. झ. °रार्थमु° । ५ ख. ग. च. झ. °थाच व । ६ क. दुर्थविज्ञानेन ग° ।

संजय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥

भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक् पृथक् ॥ १८ ॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥
अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ।

अर्जुन उवाच—

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

संजय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥
तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान्।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा।
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान्।
कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ॥ २७ ॥

अर्जुन उवाच—

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्।
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥ २८ ॥
वेपथुश्च शरीरे मे रोमहर्षश्च जायते।
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ॥ २९ ॥
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः।
निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३० ॥
न च श्रेयो नु पश्यामि हत्वा स्वजनमाहवे।
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ॥ ३१ ॥
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२ ॥
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः।
मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥ ३४ ॥

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५ ॥
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाऽऽश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६ ॥
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥
संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३ ॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥
अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥

संजय उवाच—

एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽर्जुनविषादयोगो
नाम प्रथमोऽध्यायः ॥ १ ॥

---

अथ द्वितीयोऽध्यायः ।

---

संजय उवाच—

तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

श्रीभगवानुवाच—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥

अर्जुन उवाच—

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥
गुरूनहत्वा हि महानुभावाञ्श्रेयो भोक्तुं भैक्षमपीह लोके ।
हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥५॥
न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।

यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥
कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां[1] धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥
न हि प्रपश्यामि ममापनुद्या-
द्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाऽऽधिपत्यम् ॥ ८ ॥

संजय उवाच—

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥
तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

श्रीभगवानुवाच—

'दृष्ट्वा तु पाण्डवानीकम्' इत्यारभ्य[2] 'न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह' इत्येतदन्तः प्राणिनां शोकमोहादिसंसारबीज[3]दोषोद्भवकारण-प्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थः ।

तथा ह्यर्जुनेन राज्यगुरुपुत्रमित्रसुहृत्स्वजनसंबन्धिबान्धवेष्वहमेषां ममैत इत्येवंप्रत्ययनिमित्तस्नेहविच्छेदादिनिमित्तावात्मनः शोकमोहौ प्रदर्शितौ 'कथं भीष्ममहं संख्ये' इत्यादिना । शोकमोहाभ्यां ह्यभिभूतविवेकविज्ञानः स्वत एव क्षत्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धादुपरराम । परधर्मं च भिक्षाजीवना-दिकं कर्तुं प्रववृते ।

---

१ क. ख. ग. घ. त्वां । २ ख. ग. घ. च. झ. °भ्य यावन्न यो° । ३ क. च. °रखुः-खबी° । ४ क. घ. च. °ज्भूतदो° । ५ क. घ. च. °णहेतुप्र° । ६ क. °वं भ्रान्तिप्र° ।

तथा च सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसां स्वभावत एव स्वधर्मपरित्यागः प्रतिषिद्धसेवा च स्यात् । स्वधर्मे प्रवृत्तानामपि तेषां वाङ्मनःकायादीनां प्रवृत्तिः फलाभिसंधिपूर्विकैव साहंकारा च भवति । तत्रैवं सति धर्माधर्मोपचयादिष्टानिष्टजन्मसुखदुःखसंप्राप्तिलक्षणः संसारोऽनुपरतो भवतीत्यतः संसारबीजभूतौ शोकमोहौ । तयोश्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञानान्नान्यतो निवृत्तिरिति तदुपदिदिक्षुः सर्वलोकानुग्रहार्थमर्जुनं निमित्तीकृत्याऽऽह भगवान्वासुदेवः— अशोच्यानित्यादि ।

तत्र केचिदाहुः- सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात्कैवल्यं न प्राप्यत एव किं तर्ह्यग्निहोत्रादिश्रौतस्मार्तकर्मसहिताज्ज्ञानात्कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थ इति । ज्ञापकं चाऽऽहुरस्यार्थस्य—'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि' 'कर्मण्येवाधिकारस्ते' 'कुरु कर्मैव तस्मात्त्वम्' इत्यादि ।

हिंसादियुक्तत्वाद्वैदिकं कर्माधर्मायेतीयमप्याशङ्का न कार्या, कथं क्षात्रं कर्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्तक्रूरमपि स्वधर्म इति कृत्वा नाधर्माय, तदकरणे च 'ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि' इति ब्रुवता यावज्जीवादिश्रुतिचोदितानां पश्वादिहिंसालक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवतीति ।

तदसत्, ज्ञानकर्मनिष्ठयोर्विभागवचनाद्बुद्धिद्वयाश्रययोरशोच्यानित्यादिना भगवता यावत् 'स्वधर्ममपि चावेक्ष्य' इत्येतदन्तेन ग्रन्थेन यत्परमार्थात्मतत्त्वनिरूपणं कृतं तत्सांख्यं तद्विषया बुद्धिरात्मनो जन्मादिषड्विक्रियाभावादकर्ताऽऽत्मेति प्रकरणार्थनिरूपणाद्या जायते सा सांख्यबुद्धिः सा येषां ज्ञानिनामुचिता भवति ते सांख्याः ।

एतस्या बुद्धेर्जन्मनः प्रागात्मनो देहादिव्यतिरिक्तत्वकर्तृत्वभोक्तृत्वाद्यपेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठाननिरूपणलक्षणो योगः, तद्विषया बुद्धिर्योगबुद्धिः । सा येषां कर्मिणामुचिता भवति ते योगिनः ।

तथा च भगवता विभक्ते द्वे बुद्धी निर्दिष्टे—'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इति । तयोश्च सांख्यबुद्ध्याश्रयां ज्ञानयोगेन निष्ठां

१ क ख. ग. दुःखादिप्रा° । झ. °दुःखादिसंप्रा° । २ ख. ग. घ. झ. ससंन्यासादा° । ३ ख. ग. °सादिल । ४ ख. ग. °रतरम° । ५ ख ग. °तानामश्वमेधादिकानां प° । ६ क. °नां स्वकर्मणां प° । ७ क. ख. ग. घ. च. °ना ग्रन्थेन भ । ८ क. ख. ग. च. °कस्य क° । झ. °कक° ।

सांख्यानां विभक्तां वक्ष्यति—'पुरा वेदात्मना मया प्रोक्ता' इति । तथा च योगबुद्ध्याश्रयां कर्मयोगेन(ण) निष्ठां विभक्तां[1] वक्ष्यति—'कर्मयोगेन(ण) योगिनाम्' इति । एवं सांख्यबुद्धिं योगबुद्धिं चाऽऽश्रित्य द्वे निष्ठे विभक्ते भगवतैवोक्ते ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वैकत्वानेकत्वबुद्ध्याश्रययोरेकपुरुषाश्रयत्वासंभवं पश्यता ।

यथैतद्विभागवचनं तथैव दर्शितं शातपथीये ब्राह्मणे—"एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्ति" इति सर्वकर्मसंन्यासं विधाय तच्छेषेण—"किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" इति । तत्रैव च—"प्राग्दारपरिग्रहात्पुरुषं[2] आत्मा प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रयसाधनं पुत्रं द्विप्रकारं च वित्तं मानुषं दैवं च, तत्र मानुषं वित्तं कर्मरूपं पितृलोकप्राप्तिसाधनं विद्यां[3] च दैवं वित्तं देवलोकप्राप्तिसाधनं सोऽकामयत" इत्यविद्या[4]कामवत एवं सर्वाणि कर्माणि श्रौतादीनि दर्शितानि । "तेभ्यो व्युत्थाय प्रव्रजन्ति" इति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम् । तदेतद्विभागवचनमनुपपन्नं स्याद्यदि श्रौतकर्मज्ञानयोः समुच्चयोऽभिप्रेतः[6] स्याद्भगवतः ।

न चार्जुनस्य प्रश्न उपपन्नो भवति 'ज्यायसी चेत्कर्मणस्ते' इत्यादिः । एकपुरुषानुष्ठेयत्वासंभवं बुद्धिकर्मणोर्भगवता पूर्वमनुक्तं कथमर्जुनोऽश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेन्मृषैव ज्यायसी चेत्कर्मणस्ते मता बुद्धिरिति ।

किं च यदि बुद्धिकर्मणोः सर्वेषां समुच्चय उक्तः स्यादर्जुनस्यापि स उक्त एवेति—'यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम्' इति कथमन्यतरविषय एव प्रश्नः स्यात् । न हि पित्तप्रशमार्थिनो वैद्येन मधुरं शीतं[11] च भोक्तव्यमित्युपदिष्टे तयोरन्यतरत्पित्तप्रशमन[12]कारणं ब्रूहीति प्रश्नो[13] भवति ।

अथार्जुनस्य भगवदुक्तवचनार्थविवेकानवधारणनिमित्तः प्रश्नः कल्प्येत[14], तथाऽपि भगवता प्रश्नानुरूपं प्रतिवचनं देयं, मया बुद्धिकर्मणोः समुच्चय

१ क. ख. ग. °क्तां च व° । २ क. °षश्चाऽऽत्मा । ३ क. ख. ग. झ. विद्या । ४ ख. ग. °विद्यया का° । ५ ख. ग. च. झ. °व क° । ६ ख. ग. °प्रेतो भग° । ७ घ. च. झ. स्यात्तु । म । ८ घ. झ. °न्नो ज्या° । ९ क. ख. ग. च. °थमुभयोरुपदेशे सत्यन्य° । १० क. शमनार्थिना वै° । ११ क. शीतलं । १२ च. °मका° । १३ क. प्रश्नः संभ° । १४ ख. ग. घ. झ. कल्पेत ।

उक्तः किमर्थमित्थं त्वं भ्रान्तोऽसीति । न तु पुनः प्रतिवचनमननुरूपं[1] पृष्टाद-न्यदेव द्वे निष्ठे मया पुरा प्रोक्ते इति वक्तुं युक्तम् ।

नापि स्मार्तेनैव कर्मणा बुद्धेः समुच्चयेऽभिमते विभागवचनादि सर्वमुपपन्नम्

किंच क्षत्रियस्य युद्धं स्मार्तं कर्म स्वधर्म इति जानतस्तत्किं कर्मणि घोरे मां नियोजयसीत्युपालम्भोऽनुपपन्नस्तस्माद्गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणाऽऽत्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः ।

यस्य त्वज्ञानाद्रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्त्वस्य ज्ञानमुत्पन्नं परमार्थतत्त्वविषयमेकमेवेदं सर्वं ब्रह्माकर्तृ चेति, तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थं यत्नपूर्वं[2] यथा प्रवृत्तस्त[3]थैव[4] कर्मणि प्रवृत्तस्य यत्प्रवृत्तिरूपं दृश्यते न तत्कर्म येन बुद्धेः समुच्चय-स्स्यात् ।

यथा भगवतो वासुदेवस्य[5] क्षात्र[6]कर्मचेष्टितं न ज्ञानेन समुच्चीयते पुरुषार्थ[7]-सिद्धये तद्व[8]त्तत्फलाभिसंध्यहंकाराभावस्य तुल्यत्वाद्विदुषः । तत्त्ववित्तु नाहं करोमीति मन्यते न च तत्फलमभिसंधत्ते । यथा च स्वर्गादिकामार्थिनोऽग्निहो-त्रादि[9]कामसाधनानुष्ठानायाऽऽहिताग्नेः काम्य एवाग्निहोत्रादौ प्रवृत्तस्य सामि कृते विनष्टेऽपि कामे तदेवाग्निहोत्राद्यनुतिष्ठतोऽपि न तत्काम्यमग्निहोत्रादि भवति ।

तथा च दर्शयति भगवान् ‘ कुर्वन्नपि ’ ‘ न करोति न लिप्यते ’ इति तत्र तत्र । यच्च ‘ पूर्वैः[10] पूर्वतरं कृतम् ’ ‘ कर्मणैव हि संसिद्धिमास्थिता जनकादयः ’ इति तत्तु[11] प्रविभज्य विज्ञेयम् । तत्कथम्, यदि तावत्पूर्वे जन-कादयस्तत्त्वविदोऽपि प्रवृत्तकर्माणः स्युस्ते लोकसंग्रहार्थं गुणा गुणेषु वर्तन्त इति ज्ञानेनैव संसिद्धिमास्थिताः, कर्मसंन्यासे प्राप्तेऽपि कर्मणा सहैव संसिद्धि-मास्थिता न कर्मसंन्यासं कृतवन्त इत्येषोऽर्थः ।

---

१ झ. °मनुपपन्नं प्रश्नद° । २ ख. ग. यथापूर्वं यत्र प्र° । ३ क. ‘वृत्तिस्त° । ४ ख. ग. घ. ङ. °व प्र° । ५ ख. ग. °स्य क्षत्रधर्म° । ६ घ. °त्रधर्म° । च. °धर्मे चे° । ७ ग. घ. च. ‘द्वत्क° । ८ क. व. ञ. °त्वात् । त° । ९ क. ख. ग. ‘दिकर्मलक्षणधर्मानु° । घ. °दिक-र्मसा° । च. °दिकाम्यसा° । १० ख. ग. झ. कृतं कर्म क° । ११ ख. ग. च. झ. तत्र ।

अथ न ते तत्त्ववित् ईश्वरसमर्पितेन कर्मणा साधनभूतेन संसिद्धिं सत्त्वशुद्धिं ज्ञानोत्पत्तिलक्षणां वा संसिद्धिमास्थिता जनकादय इति व्याख्येयम् ।

एतमेवार्थं वक्ष्यति भगवान्सत्त्वशुद्धये कर्म कुर्वन्तीति । 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्युक्त्वा सिद्धिं प्राप्तस्य च पुनर्ज्ञाननिष्ठां वक्ष्यति 'सिद्धिं प्राप्तो यथा ब्रह्म' इत्यादिना ।

तस्माद्गीतासु केवलादेव तत्त्वज्ञानान्मोक्षप्राप्तिर्न कर्मसमुच्चितादिति निश्चितोऽर्थः । यथा चायमर्थस्तथा प्रकरणशो विभज्य तत्र तत्र[1] दर्शयिष्यामः ।

तत्रैवं[2] धर्मसंमूढचेतसो[3] महति शोकसागरे निमग्नस्यार्जुनस्यान्यत्राऽऽत्मज्ञानादुद्धरणमपश्यन्भगवान्वासुदेवस्ततोऽर्जुनमुद्दिधारयिषुरात्मज्ञानायावतारयन्नाह—

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥**

अशोच्यानित्यादि[6] । न शोच्या अशोच्या भीष्मद्रोणादयः सद्वृत्तत्वात्परमार्थरूपेण च नित्यत्वात्, तानशोच्यानन्वशोचोऽनुशोचितवानसि ते म्रियन्ते मन्निमित्तमहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिनेति । त्वं प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे । तदेतन्मौढ्यं पाण्डित्यं च विरुद्धमात्मनि दर्शयस्युन्मत्त[7] इवेत्यभिप्रायः । यस्माद्गतासून्गतप्राणान्मृतानगतासूनगतप्राणाञ्जीवतश्च नानुशोचन्ति पण्डिता आत्मज्ञाः पण्डाऽऽत्मविषया बुद्धिर्येषां ते हि पण्डिताः "पाण्डित्यं निर्विद्य" इति श्रुतेः । परमार्थतस्तु[8] नित्यानशोच्याननुशोचस्यतो मूढोऽसीत्यभिप्रायः[9] ॥ ११ ॥

कुतस्तेऽशोच्या यतो नित्याः । कथम्—

**न त्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥**

न त्वेव जातु कदाचिदहं नाऽऽसं किं त्वासमेवातीतेषु देहोत्पत्तिवि-

---

१ घ. च. °त्र प्रद° । २ ख. ग. घ. तत्र । ३ क. °सो मिथ्याज्ञानतो म । ४ क. वस्तं ततः कृपयाऽर्जु° । च. झ. °वस्तं ततो° । ५ घ. °ज्ञानमव° । ६ ख. ग. °द्विना । न । ७ ख. ग. °यन्नुन्म° । ८ ख. ग °तस्तत्त्वं नि° । ९ घ. च. °सीत्येतत् ।

नाशेषु[1] नित्य[2] एवाहमासमित्यभिप्रायः । तथा न त्वं नाऽऽसीः किं त्वासीरेव । तथा नेमे जनाधिपा नाऽऽसन्किं त्वासन्नेव । तथा न चैव न भविष्यामः, किं तु भविष्याम एव सर्वे वयमतोऽस्माद्देहविनाशात्परमुत्तरकालेऽपि त्रिष्वपि कालेषु नित्या आत्मस्वरूपेणेत्यर्थः[3] । देहभेदानुवृत्त्या बहुवचनं नाऽऽत्मभेदाभिप्रायेण ॥ १२ ॥

तत्र कथमिव नित्य आत्मेति दृष्टान्तमाह—

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥

देहिन इति । देहोऽस्यास्तीति देही तस्य देहिनो देहवदात्मनोऽस्मिन्वर्तमाने देहे यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था यौवनं यूनो भावो मध्यमावस्था जरा वयोहानिर्जीर्णावस्थेत्येतास्तिस्रोऽवस्था अन्योन्यविलक्षणास्तासां प्रथमावस्थानाशे न नाशो द्वितीयावस्थोपजनने[4] नोपजननमात्मनः[5] किं तर्ह्यविक्रियस्यैव[6] द्वितीयतृतीयावस्थाप्राप्तिरात्मनो दृष्टा यथा तथा तद्वदेव देहादन्यो [ देहो ] देहान्तरं तस्य प्राप्तिर्देहान्तरप्राप्तिरविक्रियस्यैवाऽऽत्मन[7] इत्यर्थः । धीरो धीमांस्तत्रैवं सति न मुह्यति न मोहमापद्यते ॥ १३ ॥

यद्यप्यात्मविनाशनिमित्तो मोहो न संभवति नित्य आत्मेति[8] विजानतस्तथाऽपि शीतोष्णसुखदुःखप्राप्तिनिमित्तो मोहो लौकिको दृश्यते सुखवियोगनिमित्तो[9] दुःखसंयोग[10]निमित्तश्च शोक इत्येतदर्जुनस्य वचनमाशङ्क्याऽऽह—

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥

मात्रास्पर्शा इति । मात्रा आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि, मात्राणां स्पर्शाः शब्दादिभिः संयोगास्ते शीतोष्णसुखदुःखदाः शीतमुष्णं सुखं दुःखं च प्रयच्छन्तीति । अथवा स्पृश्यन्त इति स्पर्शा विषयाः शब्दादयः,

---

१ ख. ग. °षु घटादिषु वियदिव नि° । २ ख. ग. च. झ. °त्यमेवा° । ३ झ. त्यभिप्रायः । दे° । ४ ख. ग. °जने । ५ ख. ग. °जनः । ६ क. झ. °स्यैवैकस्या द्वि° । ७ ख. ग. °त्मनि ना° । घ. °त्मनो ना° । च. °त्मना° । ८ ख. ग. घ. झ. °ति जा° । ९ क. ग. °त्तो मोहो दुः° । १० क. °योगादिनि° ।

मात्राश्च स्पर्शाश्च शीतोष्णसुखदुःखदाः शीतं कदाचित्सुखं कदाचिद्दुःखं तथोष्णमप्यनियतरूपं सुखदुःखे पुनर्नियतरूपे यतो न व्यभिचरतोऽतस्ताभ्यां पृथक्शीतोष्णयोर्ग्रहणम् । यस्मात्ते मात्रास्पर्शादय आगमापायिन आगमापायशीलास्तस्मादनित्या[1] अतस्ताञ्शीतोष्णादींस्तितिक्षस्व प्रसहस्व तेषु हर्षं विषादं च मा कार्षीरित्यर्थः ॥ १४ ॥

शीतोष्णादीन्सहतः किं स्यादिति शृणु—

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

यं हीति । यं[2] हि पुरुषं समदुःखसुखं समे दुःखसुखे यस्य तं समदुःखसुखं सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं न व्यथयन्ति न चालयन्ति नित्यात्मदर्शनादेते यथोक्ताः शीतोष्णादयः स नित्या[3]त्म[4]दर्शननिष्ठो द्वंद्वसहिष्णुरमृतत्वायामृतभावाय मो[5]क्षाय कल्पते समर्थो भवति ॥ १५ ॥

इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तं[6] यस्मात्—

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥

नासत इति[7] । नासतोऽविद्यमानस्य शीतोष्णादेः सकारणस्य न विद्यते नास्ति भावो भवनमस्तिता । न हि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तु संभवति ।

विकारो हि सः । विकारश्च व्यभिचरति, यथा घटादिसंस्थानं चक्षुषा[8] निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसन् । जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः[9] । मृदादिकारणस्य[10] च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वम् । तदसत्त्वे च सर्वाभावप्रसङ्ग इति चेत् । न, सर्वत्र बुद्धिद्वयोपलब्धेः सद्बुद्धिरसद्बुद्धिरिति । यद्विषया बुद्धिर्न व्यभि-

१ क. ग. च. °त्या उत्पत्तिविलयरूपत्वादत° । २ ख. ग. घ. झ. यं पु° । ३ क. °त्या.नित्यस्वरूपद° । ४ घ. °त्मस्वरूपद° । ५ क. ख. ग. च. झ. °क्षायेत्यर्थः । क° । ६ ख. ग. °क्तं स्याद्यस्मा° । ७ क. °ति । अस° । ८ घ. °क्षुरादिभि° । ९ क. °ब्धेः कार्यस्य घटादेर्मृ° । घ. °ब्धेः कार्यस्य मृ° । १० क. °स्य तत्कारणस्य च ।

चरति तत्सत्, यद्विषया बुद्धिर्व्यभिचरति तदसदिति सदसद्विभागे बुद्धितन्त्रे स्थिते सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणे ।

न नीलोत्पलवत्सन्घटः सन्पटः सन्हस्तीति । एवं सर्वत्र । तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति । तथा च दर्शितम् । न तु सद्बुद्धिः । तस्माद्घटादिबुद्धिविषयोऽसन्व्यभिचारात्, न तु सद्बुद्धिविषयोऽव्यभिचारात् । घटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति चेत् । न, पटादावपि सद्बुद्धिदर्शनात् । विशेषणविषयैव सा सद्बुद्धिः । सद्बुद्धिवद्घटबुद्धिरपि घटान्तरे दृश्यत इति चेत् । न, पटादावदर्शनात् ।

सद्बुद्धिरपि नष्टे घटे न दृश्यत इति चेत् । न, विशेष्याभावात् । सद्बुद्धिर्विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किंविषया स्यात्, नतु पुनः सद्बुद्धेर्विषयाभावात् । एकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमिति चेत्[१] । नेदमुदकमिति मरीच्यादावन्यतराभावेऽपि सामानाधिकरण्यदर्शनात् । तस्माद्देहादेर्द्वंद्वस्य च सकारणस्यासतो न विद्यते भाव इति ।

तथा सतश्चाऽऽत्मनोऽभावोऽविद्यमानता न विद्यते सर्वत्राव्यभिचारादित्यवोचाम । एवमात्मानात्मनोः सदसतोरुभयोरपि दृष्ट उपलब्धोऽन्तो निर्णयः सत्सदेवासदसदेवेति त्वनयोर्यथोक्तयोस्तत्त्वदर्शिभिः । तदिति सर्वनाम सर्वं च ब्रह्म तस्य नाम तदिति तद्भावस्तत्त्वं ब्रह्मणो याथात्म्यं तद्द्रष्टुं शीलं येषां ते तत्त्वदर्शिनस्तैस्तत्त्वदर्शिभिः । त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च हित्वा शीतोष्णादीनि नियतानियतरूपाणि द्वंद्वानि विकारोऽयमसन्नेव मरीचिजलवन्मिथ्याऽवभासत इति मनसि निश्चित्य तितिक्षस्वेत्यभिप्रायः ॥ १६ ॥

किं पुनस्तद्यत्सदेव सर्वदैवास्तीति, उच्यते—

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥

अविनाशीति । अविनाशि न विनंष्टुं शीलमस्येति । तुशब्दोऽसतो

---

१ क. ख ग. घ. °द्बुद्धिरतोऽपि न विनश्यति । अथ स° । २ क. घ. °त् । न सद्वि° । ३ ख. ग. °वत्यन्ताभा° । ४ झ. °रात्यन्ताभा° । ५ ख. ग. °त आत्मनश्चाभा° । घ. च. °त आत्म° । ६ घ. च झ. °ष्णादींस्तितिक्ष° । ७ ख. ग. व्ययस्य° । ८ क. °शब्दः स° ।

विशेषणार्थः । तद्विद्धि विजानीहि । किं येन सर्वमिदं जगत्ततं व्याप्तं सदा-
ख्येन ब्रह्मणा साकाशमाकाशेनेव घटादयः । विनाशमदर्शनमभावमव्ययस्य
न व्येति, उपचयापचयौ न यातीत्यव्ययं तस्याव्ययस्य । नैतत्सदाख्यं ब्रह्म
स्वेन रूपेण व्येति व्यभिचरति निरवयवत्वाद्देहादिवत् । नाप्यात्मीयेनाऽऽ-
त्मीयाभावाद्यथा देवदत्तो धनहान्या व्येति न त्वेवं ब्रह्म व्येत्यतोऽव्ययस्यास्य
ब्रह्मणो विनाशं न कश्चित्कर्तुमर्हति न कश्चिदात्मानं विनाशयितुं शक्नोतीश्व-
रोऽपि । आत्मा हि ब्रह्म स्वात्मनि च क्रियाविरोधात् ॥ १७ ॥

किं पुनस्तदसद्यत्स्वात्मसत्तां व्यभिचरतीति । उच्यते—

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ॥
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥

अन्तवन्त इति । अन्तवन्तोऽन्तो विनाशो विद्यते येषां तेऽन्तवन्तो यथा मृगतृष्णिकोदकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते स तस्या अन्तस्तथेमे देहाः स्वप्नमायादेहादिवच्चान्तवन्तो नित्यस्य शरीरिणः शरीरवतोऽनाशिनोऽप्रमेयस्याऽऽत्मनोऽन्तवन्त इत्युक्ता विवेकिभिरित्यर्थः । नित्यस्यानाशिन इति न पुनरुक्तं नित्यत्वस्य द्विविधत्वाल्लोके नाशस्य च । यथा देहो भस्मीभूतोऽदर्शनं गतो नष्ट उच्यते विद्यमानोऽप्यन्यथापरिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते । तत्रानाशिनो नित्यस्येति द्विविधेनापि नाशेनासंबन्धोऽस्येत्यर्थः ।

अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यादात्मनस्तन्मा भूदिति नित्यस्यानाशिन इत्याह । अप्रमेयस्य न प्रमेयस्य प्रत्यक्षादिप्रमाणैरपरिच्छेद्यस्येत्यर्थः । नन्वागमेनाऽऽत्मा परिच्छिद्यते प्रत्यक्षादिना च पूर्वम् । न, आत्मनः । स्वतःसिद्धत्वात् । सिद्धे ह्यात्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति । न हि पूर्वमित्थमहमित्यात्मानमप्रमाय पश्चात्प्रमेयपरिच्छेदाय प्रवर्तते । न ह्यात्मा नाम कस्यचिदप्रसिद्धो भवति ।

शास्त्रं त्वन्त्यं प्रमाणमतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रमाणत्व-

---

१ क. ख. व्याप्तमा° । २ ख. ग °णाऽऽकाशे° । ३ ख. ग. अन्तो वि° । ४ क. ख. ष. °ष्णिकादौ । ५ ख. ग. घ. च. झ °स्यान्त° । ६ ०. ग. तथा धननाशेऽप्येवम् । तत्रा° । ७ क. ख. झ. °दनि° । ८ च. झ. °स्येत्येतत् । न° । ९ ख. ग. °ना चेति चेन्न पूर्वमात्म° । १० क. ख. न. पूर्वमात्म° । ११ क. झ. °त्मानं प्र° ।

मात्मनि[1] प्रतिपद्यते न त्वज्ञातार्थज्ञापकत्वेन । तथा च श्रुतिः—" यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा[2] सर्वान्तरः " इति । यस्मादेवं नित्योऽविक्रियश्चाऽऽत्मा तस्माद्युध्यस्व युद्धादुपरमं मा कार्षीरित्यर्थः । न ह्यत्र युद्धकर्तव्यता विधीयते । युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धस्तूष्णीमास्ते[3] तस्य[4] कर्तव्यप्रतिबन्धापनयनमात्रं भगवता क्रियते । तस्माद्युध्यस्वेत्यनुवादमात्रं न विधिः ॥ १८ ॥

शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रं न प्रवर्तकमित्येतस्यार्थस्य साक्षिभूते ऋचावानिनाय भगवान् । यत्तु[5] मन्यसे युद्धे भीष्मादयो मया हन्यन्ते[6]ऽहमेव तेषां हन्तेत्येषा बुद्धिर्मृषैव[7] ते । कथम्—

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥

य एनमिति । य एनं प्रकृतं देहिनं वेत्ति जानाति हन्तारं हननक्रियायाः कर्तारं, यश्चैनमन्यो मन्यते हतं देहहनने हतोऽहमिति हननक्रियायाः कर्मभूतं, तावुभौ न विजानीतो[8] न ज्ञातवन्तावविवेकेनाऽऽत्मानम[9]हंप्रत्ययविषयं, हन्ताऽहं हतोऽस्म्यहमिति देहहननेना[10]ऽऽत्मानम[11]हंप्रत्ययविषयं यौ विजानीतस्तावात्मस्वरूपानभिज्ञावित्यर्थः । यस्मान्नायमात्मा हन्ति न हननक्रियायाः कर्ता[12] भवति, न[13] हन्यते न च कर्म भवतीत्यर्थः, अविक्रियत्वात् ॥ १९ ॥

कथमविक्रिय आत्मेति द्वितीयो मन्त्रः—

न जायते म्रियते वा कदाचि-
न्नायं भूत्वाऽभविता वा न भूयः ॥
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २० ॥

न जायते नोत्पद्यते जनिलक्षणा वस्तुविक्रिया नाऽऽत्मनो विद्यत इत्यर्थः । न म्रियते वा । वाशब्दश्चार्थे । न म्रियते चेत्यन्त्या विनाशलक्षणा विक्रिया

---

१ क. ख. ग. घ. झ. °त्मनः प्र° । २ ख. ग. घ. च आत्मेति । ३ क ख. ग. घ. °स्तेऽतस्तस्य । ४ ख. ग. घ. °स्य प्र° । ५ ध. यस्त्वं । च. यन्मन्य° । ६ ख. ग. °मेषां । ७ ख. ग. °व । क° । ८ ख. ग. घ. 'तोऽवि° । ९ च. झ. °त्म नं ह° । १० घ. झ. °नन आत्मा° । ११ क. °त्मानं यौ । १२ ख. ग. च. झ. °र्ता न । १३ क. झ. न च ह° ।

प्रतिषिध्यते । कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधैः संबध्यते न कदाचिज्जायते न कदाचिन्म्रियत इत्येवम् । यस्मादयमात्मा भूत्वा भवनक्रियामनुभूय पश्चादभविताऽभावं गन्ता न भूयः पुनस्तस्मान्न म्रियते । यो हि भूत्वा न भविता स म्रियत इत्युच्यते लोके । वाशब्दान्नशब्दाच्चायमात्माऽभूत्वा भविता वा देहवन्न भूयः पुनस्तस्मान्न जायते । यो ह्यभूत्वा भविता स जायत इत्युच्यते नैवमात्माऽतो न जायते । यस्मादेवं तस्मादजो यस्मान्न म्रियते तस्मान्नित्यश्च ।

यद्यप्याद्यन्तयोर्विक्रिययोः प्रतिषेधे सर्वा विक्रियाः प्रतिषिद्धा[१] भवन्ति तथाऽपि मध्यभाविनीनां विक्रियाणां स्वशब्दैरेव तदर्थैः प्रतिषेधः कर्तव्य इत्यनुक्तानामपि यौवनादिसमस्तविक्रियाणां प्रतिषेधो यथा स्यादित्याह शाश्वत इत्यादिना । शाश्वत इत्यपक्षयलक्षणा विक्रिया प्रतिषिध्यते शश्वद्भवः शाश्वतः । नापक्षीयते स्वरूपेण निरवयवत्वान्निर्गुणत्वाच्च नापि गुणक्षयेणापक्षयः । अपक्षयविपरीताऽपि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते पुराण इति । यो ह्यवयवागमेनोपचीयते स वर्धतेऽभिनव इति चोच्यते । अयं त्वात्मा निरवयवत्वात्पुराऽपि नव एवेति पुराणो न वर्धत इत्यर्थः । तथा न हन्यते न विपरिणम्यते हन्यमाने विपरिणम्यमानेऽपि शरीरे । हन्तिरत्र विपरिणामार्थो द्रष्टव्योऽपुनरुक्तताये न विपरिणम्यत इत्यर्थः । अस्मिन्मन्त्रे षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते । सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः । यस्मादेवं तस्मादुभौ तौ न विजानीत इति पूर्वेण मन्त्रेणास्य संबन्धः ॥ २० ॥

य एनं वेत्ति हन्तारमित्यनेन मन्त्रेण हननक्रियायाः कर्ता कर्म च न भवतीति प्रतिज्ञाय 'न जायते' इत्यनेनाविक्रियत्वे हेतुमुक्त्वा प्रतिज्ञातार्थमुपसंहरति—

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥

वेदाविनाशिनमिति । वेद विजानात्यविनाशिनमन्त्यभावविकाररहितं नित्यं विपरिणामरहितं यो वेदेति संबन्धः । एनं पूर्वेण मन्त्रेणोक्तलक्ष-

---

१ झ. षिध्यन्ते न°। २ अ. ग. झ. °णां शब्दैनैव । ३ च णात्रे । ४ क. ख. ग. घ. झ. °णामत ।

अजं जन्मरहितमव्ययमपक्षयरहितं कथं केन प्रकारेण स विद्वान्पुरुषोऽधिकृतो हन्ति हननक्रियां करोति। कथं वा घातयति हन्तारं प्रयोजयति। न कथंचित्कंचि[2]द्धन्ति न कथंचित्कंचिद्घातयतीत्युभयत्राऽऽक्षेप एवार्थः प्रश्ना[3]र्थासंभवात्। हेत्व[4]र्थस्य तुल्यत्वाद्विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिप्रेतो भगवतः। हन्तेस्त्वाक्षेप उदाहरणार्थत्वेन। विदुषः कं कर्मासंभवे हेतुविशेषं पश्यन्कर्माण्याक्षिपति भगवान्कथं स पुरुष इति।

ननूक्त एवाऽऽत्मनोऽविक्रियत्वं सर्वकर्मासंभवकारणविशेषः, सत्यमुक्तो न तु स कारणविशेषोऽन्यत्वाद्विदुषोऽविक्रियादात्मन इति। न[6] ह्यविक्रियं स्थाणुं विदितवतः कर्म न संभवतीति चेत्, न। विदुष आत्मत्वात्। न देहादिसंघातस्य विद्वत्ता। अतः पारिशेष्यादसंहत आत्मा विद्वानविक्रिय इति तस्य विदुषः कर्मासंभवादाक्षेपो युक्तः कथं स पुरुष इति। यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्याविक्रिय एव सन्बुद्धिवृत्त्यविवेकविज्ञानेनाविद्ययोपलब्धाऽऽत्मा कल्प्यते, एवमेवाऽऽत्मानात्मविवेकज्ञानेन बुद्धिवृत्त्या विद्ययाऽसत्यरूपयैव परमार्थतोऽविक्रिय एवाऽऽत्मा विद्वानुच्यते। विदुषः कर्मासंभववचनाद्यानि कर्माणि शास्त्रेण विधीयन्ते तान्यविदुषो विहितानीति भगवतो निश्चयोऽवगम्यते।

ननु विद्याऽप्यविदुष एव विधीयते विदितविद्यस्य पिष्टपेषणवद्विद्याविधानानर्थक्यात्। तत्राविदुषः कर्माणि विधीयन्ते न विदुष इति विशेषो नोपपद्यते। न, अनुष्ठेयस्य भावाभावविशेषोपपत्तेः। अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालमग्निहोत्रादिकर्मानेकसाधनोपसंहारपूर्वकमनुष्ठेयं कर्ताऽहं मम कर्तव्यमित्येवंप्रकारविज्ञानवतोऽविदुषो यथाऽनुष्ठेयं भवति न तु तथा न जायत इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकालभावि किंचिदनुष्ठेयं भवति। किंतु नाहं कर्ता न भोक्तेत्याद्यात्मैकत्वाकर्तृ[10]त्वादिविषयज्ञानादन्यन्नो[11]त्पद्यत इत्येष विशेष उपपद्यते। यः पुनः कर्ताऽहमिति वेत्त्यात्मानं तस्य ममेदं कर्तव्यमित्यवश्यंभाविनी बुद्धिः

---

१ क. ग. च. झ. °मजमव्ययं जननापक्ष°। २ ख. ग. °चिद्वा घात°। च. झ. °चिद्घा°। ३ ख. ग. च. झ. °श्नासं°। ४ ख. ग. घ. °र्थस्याविक्रियत्वस्य तु°। झ °र्थस्याविक्रियत्वस्य सर्वप्रतिषेधसमानत्वा°। ५ क. ख. भगवता। ६ क. नन्ववि°। ७ क. °द्यत इति चेन्न, अ°। ८ घ. च. °त्याद्यात्म°। ९ ग. झ. °त्यादिज्ञानमात्मै°। १० . ग. घ. झ. °र्तृत्वज्ञा° . घ. झ. °न्नोपपद्य°।

स्यात्तदपेक्षया सोऽधिक्रियत इति तं प्रति कर्माणि[1]। स चाविद्वान्—'उभौ तौ न विजानीतः' इति वचनात्। विशेषितस्य च विदुषः कर्माक्षेपवचनात्कथं स पुरुष इति। तस्माद्[2]विशेषित[3]स्याविक्रियात्मदर्शिनो विदुषो मुमुक्षोश्च सर्वकर्मसंन्यास एवाधिकारः। अत एव भगवान्नारायणः सांख्यान्विदुषोऽविदुषश्च कर्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति—'ज्ञानयोगेन सांख्यानां कर्मयोगेन (ण) योगिनाम्' इति। तथा च पुत्रायाऽऽह भगवान्व्यासः—'द्वाविमावथ पन्थानौ' इत्यादि।

तथा च क्रियापथश्चैव पुरस्तात्पश्चात्संन्यासश्चेति। एतमेव विभागं पुनः पुनर्दर्शयिष्यति भगवान्। अतत्त्वविदहंकारविमूढात्मा कर्ताऽहमिति मन्यते, तत्त्ववित्तु, नाहं करोमीति। तथा च सर्वकर्माणि मनसा संन्यस्याऽऽस्त इत्यादि।

तत्र केचित्पण्डितंमन्या वदन्ति जन्मादिषड्भाव[4]विक्रियारहितोऽविक्रियोऽकर्तैकोऽहमात्मेति न कस्यचिज्ज्ञानमुत्पद्यते यस्मिन्सति सर्वकर्मसंन्यास उपदिश्यते। न[5] न जायत इत्यादिशास्त्रोपदेशानर्थक्यात्[6]। यथा च शास्त्रोपदेशसामर्थ्याद्धर्मास्तित्वविज्ञानं कर्तुश्च देहान्तरसंबन्धिज्ञानं चोत्पद्यते, तथा शास्त्रात्तस्यैवाऽऽत्मनोऽविक्रियत्वात्कर्तृत्वैकत्वादिविज्ञानं कस्मान्नोत्पद्यत[7] इति प्रष्टव्यास्ते। करणागोचरत्वादिति चेन्न, मनसैवानुद्रष्टव्यमिति श्रुतेः[8]। शास्त्राचार्योपदेश[9]शमदमादिसंस्कृतं मन आत्मदर्शने करणम्। तथा च तदधिगमायानुमान आगमे च सति ज्ञानं नोत्पद्यत इति साहस[10]मेतत्। ज्ञानं चोत्पद्यमानं तद्विपरीतमज्ञानमवश्यं बाधत इत्यभ्युपगन्तव्यम्। तच्चाज्ञानं दर्शितं हन्ताऽहं हतोऽस्मीत्युभौ तौ न विजानीत इति। अत्र चाऽऽत्मनो हननक्रियायाः कर्तृत्वं कर्मत्वं हेतुकर्तृत्वं चाज्ञानकृतं दर्शितम्।

तच्च सर्वक्रियास्वपि समानं कर्तृत्वादेरविद्याकृतत्वमविक्रियत्वा[11]दात्मनः। विक्रियावान्हि कर्ताऽऽत्मनः कर्मभूतमन्यं प्रयोजयति कुर्विति। तदेतदविशेषेण विदुषः सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान्विदुषः कर्माधिकाराभावप्रदर्शनार्थं वेदाविनाशिनं कथं

---

१ क. घ. च. °णि संभवन्ति। स। २ घ, झ. °द्विदु°। ३ घ. °तस्य विदु°। ४ ख. ग. °ड्विक्रियाभावर°। ५ क. तन्न। ६ क. °र्थक्यप्रसङ्गात्। ७ क. ख. ग. °न्नोपपद्य°। ८ ख. ग. °तेः। तत्त्वमस्यादिवाक्योत्थमनोवृत्तावभिव्यक्तं ब्रह्मात्मैकत्वं सविकल्पव्यवहारगोचरमित्यर्थः। शा°। ९ क. च. °शजनितश°। १० क. °समात्रमे°। ११ घ. °त्वादेवाऽऽत्म°।

स पुरुष इत्यादिना । क्व पुनर्विदुषोऽधिकार इत्येतदुक्तं पूर्वमेव ज्ञानयोगेन सांख्यानामिति । तथा[1] च सर्वकर्मसंन्यासं वक्ष्यति सर्वकर्माणि मनसेत्यादिना ।

ननु मनसेति वचनान्न वाचिकानां कायिकानां च संन्यास इति चेन्न, सर्वकर्माणीति विशेषितत्वात् । मानसानामेव सर्वकर्मणामिति चेन्न, मनोव्यापारपूर्वकत्वाद्वाक्कायव्यापाराणां मनोव्यापाराभावे[2] तदनुपपत्तेः । शास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानि वर्जयित्वाऽन्यानि सर्वकर्माणि मनसा संन्यसेदिति चेन्न, नैव कुर्वन्न कारयन्निति विशेषणात् । सर्वकर्मसंन्यासोऽयं भगवतोक्तो मरिष्यतो न जीवत इति चेन्न, नवद्वारे पुरे देह्यास्त इतिविशेषणानुपपत्तेः ।

न हि सर्वकर्मसंन्यासेन मृतस्य तद्देह आसनं संभवति । अकुर्वतोऽकारयतश्च देहे संन्यस्येति संबन्धो न देह आस्त इति चेन्न, सर्वत्राऽऽत्मनोऽविक्रियत्वावधारणात् । आसनक्रियायाश्चाधिकरणापेक्षत्वात्तदनपेक्षत्वाच्च संन्यासस्य । संपूर्वस्तु न्यास[3]शब्दस्त्यागार्थो न निक्षेपार्थः । तस्माद्गीताशास्त्र आत्मज्ञानवतः संन्यास एवाधिकारो न कर्मणीति तत्र तत्रोपरिष्टादात्मज्ञानप्रकरणे दर्शयिष्यामः ॥ २१ ॥

प्रकृतं तु वक्ष्यामः, तत्राऽऽत्मनोऽविनाशित्वं प्रतिज्ञातं तत्किमिवेत्युच्यते—

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ॥
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २२ ॥

वासांसीति । वासांसि वस्त्राणि जीर्णानि दुर्बलतां गतानि यथा लोके विहाय परित्यज्य नवान्यभिनवानि गृह्णात्युपादत्ते नरः पुरुषोऽपराण्यन्यानि तथा तद्वदेव शरीराणि विहाय जीर्णान्यन्यानि संयाति संगच्छति नवानि देह्यात्मा पुरुषवदविक्रिय एवेत्यर्थः ॥ २२ ॥

---

१ घ. ङ. °था स° । २ क. °वे कर्मानु° । ३ क. च. °शब्दोऽत्र त्यागा° । ४ घ. ङ. तत्र तत्रा° ।

कस्मादविक्रिय[1] एवेति । आह—

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥

नैनं छिन्दन्तीति । एनं प्रकृतं देहिनं न च्छिन्दन्ति शस्त्राणि निरवयवत्वान्नावयवविभागं कुर्वन्ति शस्त्राण्यस्यादीनि । तथा नैनं दहति पावकोऽग्निरपि न भस्मी करोति । तथा नैनं क्लेदयन्त्यापः । अपां हि सावयवस्य वस्तुन आर्द्रीभावकरणेनावयवविश्लेषापादने सामर्थ्यं तन्न निरवयव आत्मनि संभवति । तथा स्नेहवद्द्रव्यं स्नेहशोषणेन नाशयति वायुरेनं[2] स्वात्मानं न शोषयति मारुतोऽपि[3] ॥ २३ ॥

यत एवं तस्मात्—

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥

अच्छेद्योऽयमिति । यस्मादन्योन्यनाशहेतूनि भूतान्येनमात्मानं[4] नाशयितुं नोत्सहन्ते तस्मान्नित्यो नित्यत्वात्सर्वगतः सर्वगतत्वात्स्थाणुः स्थाणुरिव स्थिर इत्येतत् । स्थिरत्वादचलोऽयमात्माऽतः सनातनश्चिरंतनो न कारणात्कुतश्चिन्निष्पन्नोऽभिनव इत्यर्थः । नैतेषां श्लोकानां पौनरुक्त्यं चोदनीयम् । यत एकेनैव श्लोकेनाऽऽत्मनो नित्यत्वमविक्रियत्वं चोक्तं ' जायते म्रियते वा ' इत्यादिना[5] । तत्र यदेवाऽऽत्मविषयं किंचिदुच्यते तदेतस्माच्छ्लोकार्थान्नातिरिच्यते किंचिच्छब्दतः पुनरुक्तं किंचिदर्थत इति[6] । दुर्बोधत्वादात्मवस्तुनः पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान्वासुदेवः कथं नु नाम संसारिणामव्यक्तं तत्त्वं बुद्धिगोचरतामापन्नं सत्संसारनिवृत्तये स्यादिति ॥ २४ ॥

किं च—

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥

अव्यक्तोऽयमिति । अव्यक्तः सर्वकरणाविषयत्वान्न व्यज्यत इत्यव्यक्तोऽयमात्मा । अत एवाचिन्त्योऽयम् । यद्धीन्द्रियगोचरं वस्तु तच्चिन्ताविषयत्व-

१ ख. ग. घ. झ. °य इति । २ च. °वेत्यत आ° । ३ ग. °पि आकाशवत् ॥ २३ ॥
४ ख. ग. घ. झ. °तान्यात्मा° । ५ ख. ग. °न्तेऽन्यादीनि त° । ६ ख. ग. °ति ॥ सत्यं दु° ।

मापद्यतेऽयं त्वात्माऽनिन्द्रियगोचरत्वादचिन्त्यः। अविकार्योऽयम्। यथा क्षीरं दध्यातञ्चनादिना विकारि न तथाऽयमात्मा। निरवयवत्वाच्चाविक्रियः। न हि निरवयवं किंचिद्विक्रियात्मकं दृष्टम्। अविक्रियत्वादविकार्योऽयमात्मोच्यते। तस्मादेवं यथोक्तप्रकारेणैनमात्मानं विदित्वा त्वं नानुशोचितुमर्हसि हन्ताऽहमेषां मयेमे हन्यन्त इति ॥ २५ ॥

आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते—

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।
तथाऽपि त्वं महाबाहो नैवं शोचितुमर्हसि ॥ २६ ॥

अथ चैनमिति। अथ चेत्यभ्युपगमार्थः। एनं प्रकृतमात्मानं नित्यजातं लोकप्रसिद्ध्या प्रत्यनेकशरीरोत्पत्तिं जातो जात इति मन्यसे। तथा प्रतितद्विनाशं नित्यं वा मन्यसे मृतं मृतो मृत इति। तथाऽपि तथाभाविन्यप्यात्मनि त्वं महाबाहो नैवं शोचितुमर्हसि जन्मवतो जन्मनाशवतो नाशश्चेत्येताववश्यंभाविनाविति ॥ २६ ॥

तथा च सति—

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

जातस्येति। जातस्य हि लब्धजन्मनो ध्रुवोऽव्यभिचारी मृत्युर्मरणं ध्रुवं जन्म मृतस्य च तस्मादपरिहार्योऽयं जन्ममरणलक्षणोऽर्थस्तस्मिन्नपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

कार्यकरणसंघातात्मकान्यपि भूतान्युद्दिश्य शोको न युक्तः कर्तुं यतः—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

अव्यक्तादीनीति। अव्यक्तादीन्यव्यक्तमदर्शनमनुपलब्धिरादिर्येषां भूतानां पुत्रमित्रादिकार्यकरणसंघातात्मकानां तान्यव्यक्तादीनि भूतानि प्रागुत्पत्तेः। उत्पन्नानि च प्राङ्मरणाद्व्यक्तमध्यानि। अव्यक्तनिधनान्येव पुनरव्यक्तम-

---

१ क. ख. ग. अतु एवात्मे°। २ घ. विकुरुते। ३ ख. ग. घ. °रि, अयं नि°। ४ ग. च. °सि ॥ २७ ॥ यद्यपि आत्मनि शोको न युक्तस्तथाऽपि का°। ५ क. घ झ. °र्यकार°। ६ क. ख. ग. घ झ. °र्यकार°।

दर्शनं निधनं मरणं येषां तान्यव्यक्तनिधनानि । मरणादूर्ध्वमप्यव्यक्ततामेव प्रतिपद्यन्त इत्यर्थः ।

तथा चोक्तम्—" अदर्शनादापतितः पुनश्चादर्शनं गतः ।

नासौ तव न तस्य त्वं वृथा का परिदेवना " ॥ इति । तत्र का परिदेवना को वा प्रलापोऽदृष्टदृष्टप्रनष्टभ्रान्तिभूतेषु भूतेष्वित्यर्थः ॥ २८ ॥

दुर्विज्ञेयोऽयं प्रकृत आत्मा किं त्वामेवैकमुपालभे साधारणे भ्रान्तिनिमित्ते । कथं दुर्विज्ञयोऽयमात्मेति[1] । आह—

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ २९ ॥

आश्चर्यवदिति । आश्चर्यवदाश्चर्यमदृष्टपूर्वम्[2]द्भुतमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्यवदाश्चर्यमिवैनमात्मानं[3] पश्यति कश्चित् । आश्चर्यवदेनं वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति । श्रुत्वा दृष्ट्वोक्त्वाऽप्येनं[4] वेद न चैव कश्चित् । अथ वा योऽयमात्मानं पश्यति स आश्चर्यतुल्यो यो वदति यश्च शृणोति सोऽनेकसहस्रेषु कश्चिदेव भवति । अतो दुर्बोध आत्मेत्यभिप्रायः ॥ २९ ॥

अथेदानीं प्रकरणार्थमुपसंहरन्ब्रूते[5]—

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥

देहीति । *सर्वस्य प्राणिजातस्य देहे वध्यमानेऽप्ययं देही न वध्यो यस्मात्तस्माद्भीष्मादीनि सर्वाणि भूतान्युद्दिश्य न त्वं शोचितुमर्हसि ॥ ३० ॥

---

* इतः पूर्वं क. ख. ग. पुस्तकेषु ' देही शरीरी नित्यं सर्वदा सर्वावस्थास्ववध्यो निरवयवत्वान्नित्यत्वाच्च तत्रावध्योऽयं देहे शरीरे सर्वस्य सर्वगतत्वात्स्थावरादिषु स्थितोऽपि ' इत्यधिकं भाष्यं दृश्यते ।

---

१ ख. ग. घ. ङ. गत इ° । २ क. ख. °त्मेत्यत आ° । ३ क. °ष्टपूर्वम° । ख. ग. °दृष्टपूर्वम° । ४ ख. ग. °र्यमि° । ५ ख. ग. घ. ङ. °देव व° । ६ क. ख. ग. °क्त्वाऽप्यात्मानं । ७ ङ. च. ङ. °र्थं उपसंह्रियते ।

इह परमार्थतत्त्वापेक्षायां शोको मोहो वा न संभवतीत्युक्तं, न केवलं परमार्थतत्त्वापेक्षायामेव किं तु—

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते॥ ३१॥**

स्वधर्ममिति। स्वधर्ममपि स्वो धर्मः क्षत्रियस्य युद्धं तमप्यवेक्ष्य त्वं न विकम्पितुं प्रचलितुं नार्हसि स्वाभाविकाद्धर्मादात्मस्वाभाव्यादित्यभिप्रायः। तच्च युद्धं पृथिवीजयद्वारेण धर्मार्थं प्रजारक्षणार्थं चेति धर्मादनपेतं परं धर्म्यं तस्माद्धर्म्याद्युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते हि यस्मात्॥ ३१॥

कुतश्च तद्युद्धं कर्तव्यमिति। उच्यते—

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्॥ ३२॥**

यदृच्छयेति। यदृच्छया चाप्रार्थितयोपपन्नमागतं[1] स्वर्गद्वारमपावृतमुद्घाटितं[2][3] ये तदीदृशं युद्धं लभन्ते क्षत्रिया हे पार्थ किं न सुखिनस्ते॥ ३२॥

एवं कर्तव्यताप्राप्तमपि—

**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि॥ ३३॥**

अथ चेत्त्वमिमं धर्म्यं धर्मादनपेतं[4] संग्रामं युद्धं न करिष्यसि चेत्ततस्तदकरणात्स्वधर्मं कीर्तिं च महादेवादिसमागमनिमित्तां[5] हित्वा केवलं पापमवाप्स्यसि॥ ३३॥

न केवलं स्वधर्मकीर्तिपरित्यागः—

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।**
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते॥ ३४॥**

अकीर्तिं[6] चापि[7] भूतानि कथयिष्यन्ति ते तवाव्ययां दीर्घकालाम्। धर्मात्मा

१ क. ख. ग. घ. ङ. °तमागतमुपपन्नं स्व°। २ च. °टितमात्र°। ३ क. °तं य एत°। ख. ग. °तं यत्तदी°। ४ क. ख. ग. °तं विहितं सं°। ५ घ. °गमादिनि°। ६ च. °तिं च युद्ध भू°। ७ क. °पि युद्धे भू°।

शूर इत्येवमादिभिर्गुणैः संभावितस्य चाकीर्तिर्मरणादतिरिच्यते । संभावितस्य चाकीर्तेर्वरं मरणमित्यर्थः ॥ ३४ ॥

किंच—

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।

येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥

भयादिति । भयात्कर्णादिभ्यो रणाद्युद्धादुपरतं निवृत्तं मंस्यन्ते चिन्तयिष्यन्ति न कृपयेति त्वां महारथा दुर्योधनप्रभृतयः । येषां च त्वं दुर्योधनादीनां बहुमतो बहुभिर्गुणैर्युक्त इत्येवं बहुमतो भूत्वा पुनर्यास्यसि लाघवं लघुभावम् ॥ ३५ ॥

किंच—

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।

निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥

अवाच्यवादानिति । अवाच्यवादानवक्तव्यवादांश्च बहूननेकप्रकारान्वदिष्यन्ति तवाहिताः शत्रवो निन्दन्तः कुत्सयतन्तस्तव त्वदीयं सामर्थ्यं निवातकवचादियुद्धनिमित्तम् । तस्मात्ततो निन्दाप्राप्तेर्दुःखाद्दुःखतरं नु किम् । ततः कष्टतरं दुःखं नास्तीत्यर्थः ॥ ३६ ॥

युद्धे पुनः क्रियमाणे कर्णादिभिः—

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।

तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥

हतो वेति । हतो वा प्राप्स्यसि स्वर्गं हतः सन्स्वर्गं प्राप्स्यसि जित्वा वा कर्णादीञ्शूरान्भोक्ष्यसे महीम् । उभयथाऽपि तव लाभ एवेत्यभिप्रायः । यत एवं तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयो जेष्यामि शत्रून्मारिष्यामि वेति निश्चयं कृत्वेत्यर्थः ॥ ३७ ॥

तत्र युद्धं स्वधर्म इत्येवं युध्यमानस्योपदेशमिमं शृणु—

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।

ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥

सुखदुःखे इति । सुखदुःखे समे तुल्ये कृत्वा रागद्वेषावकृत्वेत्येतत् ।

---

१ क. झ. °र्थं तस्मा°। २ ख. ग. °कवचवधादिषु। ३ ख. ग. च. झ. °त्र स्व°। ४ क. ख. ग. °द्व्यक्रु°।

तथा लाभालाभौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व घटस्व। नैवं युद्धं कुर्वन्पापमवाप्स्यसीत्येष उपदेशः प्रासङ्गिकः ॥ ३८ ॥

शोकमोहापनयनाय लौकिको न्यायः स्वधर्ममपि चावेक्ष्येत्याद्यैः श्लोकैरुक्तो न तु तात्पर्येण। परमार्थदर्शनं त्विह प्रकृतं तच्चोक्तमुपसंह्रियत एषा तेऽभिहितेति शास्त्रविषयविभागप्रदर्शनाय। इह हि दर्शिते पुनः शास्त्रविषयाविभाग उपरिष्टाज्ज्ञानयोगेन सांख्यानां कर्मयोगेन (ण) योगिनामिति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्तिष्यते श्रोतारश्च विषयविभागेन सुखं ग्रहीष्यन्तीत्यत आह—

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥

एषा त इति। एषा ते तुभ्यमभिहितोक्ता सांख्ये परमार्थवस्तुविवेकविषये बुद्धिर्ज्ञानं साक्षाच्छोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम्। योगे तु तत्प्राप्त्युपाये निःसङ्गतया द्वंद्वप्रहाणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे चेमामनन्तरमेवोच्यमानां बुद्धिं शृणु। तां बुद्धिं स्तौति प्ररोचनार्थं बुद्ध्या यया योगविषयया युक्तो हे पार्थ कर्मबन्धं कर्मैव धर्माधर्माख्यो बन्धः कर्मबन्धस्तं प्रहास्यसीश्वरप्रसादनिमित्तज्ञानप्राप्तेरित्यभिप्रायः ॥ ३९ ॥

किंचान्यत्—

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

नेहाभीति। नेह मोक्षमार्गे कर्मयोगेऽभिक्रमनाशोऽभिक्रमणमभिक्रमः प्रारम्भस्तस्य नाशो नास्ति। यथा कृष्यादेर्योगविषये प्रारम्भस्य नानैकान्तिकफलत्वमित्यर्थः। किंच नापि चिकित्सावत्प्रत्यवायो विद्यते। किं तु भवति। स्वल्पमप्यस्य योगधर्मस्यानुष्ठितं त्रायते रक्षति महतः संसारभयाज्जन्ममरणादिलक्षणात् ॥ ४० ॥

---

१ क. च. °फलम°। २ ख. ग. ङ. च. ञ. °संहरत्येषा। ३ ख. ग. ञ. °ते शा° ४ घ. °त्यभिप्रायेणाऽऽह। ५ व. °ते भवति। किंतु स्व°। ६ ग. °स्य ध°।

येयं सांख्ये बुद्धिरुक्ता योगे च वक्ष्यमाणलक्षणा सा—

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥

व्यवसायेति । व्यवसायात्मिका निश्चयस्वभावैकैव बुद्धिरितरविपरीतबुद्धि-शाखाभेदस्य बाधिका सम्यक्प्रमाणजनितत्वादिह श्रेयोमार्गे हे कुरुनन्दन । याः पुनरितरा बुद्धयो यासां शाखाभेदप्रचारवशादनन्तोऽपारोऽनुपरतः संसारो नित्यप्रतता[1] विस्तीर्णो भवति, प्रमाणजनितविवेकबुद्धिनिमित्तवशाच्चो-परतास्वनन्तभेदबुद्धिषु संसारोऽप्युपरमते । ता बुद्धयो बहुशाखा बह्व्यः शाखा यासां ता बहुशाखा बहुभेदा इत्येतत् । प्रतिशाखाभेदेन ह्यनन्ताश्च बुद्धयः केषामव्यवसायिनां प्रमाणजनितविवेकबुद्धिरहितानामित्यर्थः ॥ ४१ ॥

येषां व्यवसायात्मिका बुद्धिर्नास्ति ते—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥

यामिति । यामिमां वक्ष्यमाणां पुष्पितां पुष्पितवृक्ष इव शोभमानां श्रूयमाणरमणीयां वाचं वाक्यलक्षणां प्रवदन्ति । केऽविपश्चितोऽल्पमेध-सोऽविवेकिन इत्यर्थः । वेदवादरता बह्वर्थवादफलसाधनप्रकाशकेषु वेद-वाक्येषु रता हे पार्थ नान्यत्स्वर्ग[2]प्राप्त्यादिफलसाधनेभ्यः कर्मभ्योऽस्ती-त्येवंवादिनो वदनशीलाः ॥ ४२ ॥

ते च—

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥

कामात्मान इति । कामात्मानः कामस्वभावाः कामपरा इत्यर्थः । स्वर्गपराः स्वर्गः परः पुरुषार्थो येषां ते स्वर्गपराः स्वर्गप्रधाना जन्मकर्मफलप्रदां कर्मणः फलं कर्मफलं जन्मैव कर्मफलं जन्मकर्मफलं तत्प्रददातीति जन्मकर्मफलप्रदा तां वाचं प्रवदन्तीत्यनुषज्यते । क्रियावि-शेषबहुलां क्रियाणां विशेषाः क्रियाविशेषास्ते बहुला यस्यां वाचि तां

१ ख. ग. घ. ङ. 'तो भ' । २ क. ध. ङ. 'र्गपश्वादि' ।

